इस प्रसंग के द्वारा स्वामी जी ने मुझे समझा दिया कि दो भिन्न देहों के होने पर भी दोनों में एक ही गुरुतत्व विद्यमान होता है। यह बात स्पष्ट करते हुए उन्होंने ऐसे सरलता से समझा दी कि मेरे मन में गुरुतत्व के बारे में ऐसे स्पष्ट हो गई जैसे कहते हैं, हाथ कंगन को आरसी क्या ! समस्या का हल ऐसे हुआ जैसे सूरज की किरणों से अंधेरा नष्ट हो जाता है।

• • •

## *भारतमातृसंदेशः*

सर्वे धर्माः समानाश्च न वैरं दृश्यतां क्वचित्।
मानवधर्म उत्कृष्टो मुनीनां वचनं त्विदम्।।
मुनिभिः कथितं वाक्यं विस्मर्यं न कदाचन।
इदं वाक्यं महावाक्यं जनकल्याणकारकम्।।
भेदभावं परित्यज्य समभावं निषेवन।
सद्गतिं समभावेन लभन्ते मानवाः सदा।।
ब्रह्मरूपिमिदं सर्वं विश्वं स्थावरजङ्गमम्।
मानवधर्म उत्कृष्टो मुनिभिः परिकीर्तितः।।
धर्मस्य लक्षणं प्रोक्तं युगधर्मस्य चालकैः।
अहिंसा समता प्रीति र्विश्वबन्धुत्ववर्धिनी।।
अधर्मं धर्ममित्याहुर्जना अज्ञानकारणात्।
अन्धकारमयं तेषां जीवनं गर्हितं सदा।।

रचयिता :- डॉ॰ बी. एन. कल्ल
विस्थापितः कश्मीरी पण्डित
पूर्व संस्कृत विभागाध्यक्ष,
गर्वनमेंट ओरियण्टल कालेज
बागि दिलावर खान,
श्रीनगर,

भाष्येऽपि प्राप्यते ।[१] जीवो यदा ब्रह्मानन्दरतो बाह्यमान्तरं च न वेद्यान्तरं किमपि वेत्ति, केवलं स ब्रह्मैव विजानाति तथैव नायिकानायकसम्भोगदशायां शृङ्गारसञ्ज्ञायां बाह्यमान्तरं किमपि न ज्ञातुं प्रभूयते रसिकैः । अस्योल्लेखः पञ्चदश्यामित्थं प्राप्यते—

कुमारादिवदेवायं ब्रह्मानन्दैकतत्परः ।
स्त्रीपरिष्वक्तवद् वेद न बाह्यं नापि चान्तरम् ॥[२]

शृङ्गाराद्वैते चरमावस्थायां तु नायिका सर्वत्रैव दरीदृश्यते यथा ब्रह्मणः स्थितिर्मिथ्याभूते जगति सर्वत्रैवाऽनुभूयते ब्रह्मविद्भिः । रामायणे[३] रामो यदा सीतामन्वेष्टुकाम इतस्ततो भ्रमति तदा स सर्वत्रैव सीतामेव पश्यति स्म । कालिदासेन विक्रमोर्वशीये[४] पुरूरवसश्चित्रणं विहितम्, तत्रापि पुरूरवाः प्रियामुर्वशीं सर्वतः पश्यति । एतत्तु नायिकाद्वैतं कथ्यते । एवमेवामरुकशतके नायको नायिकां सर्वत्र पश्यति द्वयोरद्वैतसम्बन्धात् 'सर्वं खल्विदं ब्रह्म'[५] इति श्रुतेः । यतो हि सा नायिका प्रासादे, पुरस्तात्, पृष्ठे, दिक्षु, पर्यङ्के, मार्गे चाऽखिले संसारे वरीवर्त्ति, इयं खलु चेतः काचिद् ब्रह्मरूपाऽपरा प्रकृतिर्भवितुमर्हति—

प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा ।
पर्यङ्के सा पथि पथि च सा तद्वियोगातुरस्य ॥
हंहो चेतः प्रकृतिरपरा नास्ति मे क्वापि सा सा ।
सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥[६]

श्रीमद्भागवते[७] गोपिकाभिः श्रीकृष्ण एव सर्वत्रादर्शि तत्र तु नायकाद्वैतं भवितुमर्हति । अत्र नायिकानायकाद्वैतयोरुभयोरपि शृङ्गाररसाद्वैतत्वं सहृदयैरनुभूयते । एषोऽद्वैतवाद एव शृङ्गाराद्वैतनाम्नाऽभिधातुं शक्यः । यथा सम्प्रदायविशेषभेदादनेके वादा वेदान्तदर्शने प्रचलिता अभवन् तथैवैष शृङ्गाराद्वैतवादोऽपि सहृदयहृदयसंवेद्यः सुधीभिरङ्गीकर्त्तव्यो वेदान्तदर्शने । एवमेव ब्रह्मसूत्रोपरि शृङ्गाराद्वैतसम्मतं भाष्यं चेत् कश्चित् प्रणयेत्, शृङ्गाराद्वैतदर्शनं पूर्णतया प्रतितिष्ठेत् । अत्र त्वद्वैतप्रतिपादनपरैः श्रुतिवाक्यैः काव्योपात्तशृङ्गाराद्वैतसमुद्धरणैश्च दर्शनस्याऽस्य दिङ्मात्रनिर्देशो विहित इत्यभ्युपगन्तव्यम् ।

---

१. शाङ्करभाष्ये (ब्रह्मसूत्रे) ३.३.३४, पृ. ८१३
२. पञ्चदश्याम् ११.५४
३. रामायणेऽरण्यकाण्डे, ६०,६१,६२, सर्गेषु ।
४. विक्रमोर्वशीये चतुर्थेऽङ्के ।
५. छान्दोग्योपनिषदि ३.१४.१
६. अमरुकशतके, श्लोकः १०२
७. श्रीमद्भागवते दशमस्कन्धे (पूर्वार्द्धे)-रासपञ्चाध्याय्याम् ।

# काश्मीरे संस्कृतशिलालेखाः

■ प्रो. बदरीनाथकल्ला

विद्वाङ्कुर्वन्त्वत्रभवन्तः, यत् काश्मीरमण्डले सांस्कृतिकी स्थितिश्चिराद् दृढमूलाऽभूत्। अत्रत्याभाषा काश्मीरी तु प्रायः संस्कृतस्यैव रूपान्तरमाश्रिता प्राकृतापरपर्याया प्रथिताऽस्ति। नास्ति तिरोहितमेतद्विदुषां (प्राच्यपाश्चात्यविदुषां) यत् काश्मीरे राज्यभाषा मुस्लिमशासनादर्वागपि संस्कृतमेव बभूव। सुलतानशासन-कालेऽपि विशेषतया जैनउल्लाब्दीनबड़शाह काले (१४२०-१४७० ई० पर्यन्तं) प्रायः संस्कृतेनैव राजकीयो व्यवहारः प्रचलति स्म। हिन्दुशासकानां काले संस्कृतं भाषासु सर्वोपरि वर्तते स्म। समस्तोऽपि सर्वकारीयः कार्यकलापो देववाणीमेवाधारीकृत्य प्रावर्तत। न केवलं पाठ्यक्रमः प्रत्नप्रणालीमाश्रित्य विद्यामठेष्वेव दृष्टिपथम-वतरति स्म प्रत्युत आबालगोपं योषितोऽपि स्वजन्मभाषावदेव संस्कृतेन प्राकृतेन वा व्यवहरन्ति स्म, यस्योल्लेखो द्वादशशतकीयेन बिल्हणपण्डितेन विक्रमाङ्कदेवचरिताभिधानायाः स्वस्याः कृतेश्चरमे सर्गेऽकारि। यथा—

**यत्र स्त्रीणामपि किमपरं जन्मभाषावदेव।**
**प्रत्यावासं विलसति वचः संस्कृतं प्राकृतञ्च॥**

अत्रानेके काश्मीरसभ्यतासंस्कृतिपोषका देवालयमठप्रासादविद्यालयप्रभृतयो विशिष्टाः स्मारका आसन् येषां निःशेषं क्रूरैर्यवनशासकैर्मध्ययुगे ध्वंसः कृतः,अस्योल्लेखो जोनराजश्रीवरादिभिरितिहासकारकैः स्वराज-तरङ्गिणीषु कृतोऽस्ति, अवशेषाश्च यत्र तत्र स्थिता अद्यापि भारतीयान् पाश्चात्यानपि विदुषो विस्मयाम्बुधौ मज्जयन्ति। तत्रभवता कल्हणेनापि—

**विद्यावेश्मानि तुङ्गानि कुङ्कुमं सहिमं पयः।**
**द्राक्षेति यत्र सामान्यमस्ति त्रिदिवदुर्लभम्॥**

इत्यनेन श्लोकेन विद्यावेश्मनां तुङ्गताप्रतिपादनेन त्रिदिवदुर्लभता वर्णितास्ति, अत्रत्या कतिपयनरेशाः ललितादित्य-प्रतापादित्य-अवन्तिवर्माणः स्वौजसा प्रतापेन च समस्तानपि स्वप्रातिवेशिकान् भारतीयान् नरेशान-तिशेरते स्म। यद्यपि प्रोक्तनरेशानां विरुदावलिशंसीनि चिह्नानि तथा तत्तदाश्रयलब्धप्रतिष्ठानि स्मारकानि च सामस्त्येन नोपलभ्यन्ते, तथा तदीयचरित्राण्यपि नामावशेषतामेव गतानि, तथापि यत्र तत्र तैः प्रतिष्ठापितानां देवालयवापीतडागादीनां शिलालेखाःमार्तण्ड (वर्तमान मट्टन) प्रतापपुर-(वर्तमान-तापुर) लोलाब-प्रदेशेष्वद्यापि दृश्यन्ते। तेषु मार्तण्डे शिलालेखाः ललितादित्यस्य (६५५-६७३ ई०) तथा तज्जीर्णोद्धारकर्तुः रामदेवस्य च प्रतापपुरे प्रतापादित्यस्य वाङ्गतारण्ये जयसिंहदेवस्य (११२७-११४५ ई०) सप्रमाणं स्थिरीक्रियन्ते। एतदतिरि-क्तमनेकेषां एतद्देशीयानां नरेशानां सुवाच्यैरक्षरैरङ्किताः मुद्रा अपि प्रायेणोपलभ्यन्ते, येषु तोरमाण-हुष्क-कनिष्क-

दुर्लभवर्धन-ललितादित्य-प्रतापादित्य-अवन्तिवर्म-दिद्दाप्रभृतीनां नरेशानां मुद्रास्तु सुवाच्यैः शारदाक्षरैरङ्किताः काश्मीरप्रतापसङ्ग्रहालये सुरक्षिताः सन्ति । यासु काश्चन सौवर्ण्योऽपि लभ्यन्ते । काश्मीरे तु आदिमाः प्रायशः समग्रा अपि शिलालेखाः संस्कृत एव शारदालिप्यां समुट्टङ्किताः सन्ति । अत्र त्रयोदश-शताब्द्यां तावत् हिन्दुशासकानां शासनं समुल्लसति स्म, उद्यानदेवस्य सहदेवस्य च समये काश्मीरेषु राज्यविप्लवः समजनि । परस्तात् कोटादेव्या विधर्मे दीक्षितत्वेन यवनधर्मदीक्षितेन बौद्धराजकुमारेण (रेंचनशाह) सुल्तान्-सदर-उद्दीनाभिधेन, तन्मरणानन्तरं सुल्तान् शाहमीर इत्यस्य कूटनीत्या सममेव काश्मीरः ४५७ वर्षपर्यन्तं विधर्मिशासकानां हस्तायत्तोऽभवत्, येन समये समये तदीयप्राबल्यात्तथा तत्कृतात्याचारातिरेकाच्च काश्मीरिकी संस्कृतिः प्रायेण ध्वस्ताभूत् । जोनराज-राजतरङ्गिण्यामस्य वर्णनम्:—

**मरुद्भिरिव वृक्षाणां शालीनां शलभैरिव ।**
**कश्मीरदेशाचाराणां ध्वंसोऽथ यवनैः कृतः ॥**

राजतरङ्गिणी-पृ. नं.—१०४ पद्य नं.—५७५

तदीय शासनस्य सार्धशतद्वयादूर्ध्वं राज्यभाषापदमधितिष्ठतः संस्कृतस्य स्थानं शनैः शनैः पारस्यभाषया गृहीतम् । किञ्च यवनराज्यकालेऽपि संस्कृतमिश्रेण पारस्यभाषामयेन कार्यकल्पेन राजकीयो व्यवहारः प्रचलति स्म यस्योद्धरणानि श्री क्षेमेन्द्रकृते 'लोकप्रकाशे' उपलभ्यन्ते तावत् यथाः—"संवत्सरेऽत्रदिने श्रीप्रेनापितकदले रैज्जि-अमुकेन रैज्जि-अमुकपुत्रेण हस्ते सति बंगलचीरिका दत्ता । यथा अत्र आगरान्तरे खुज्यः-अमुकः खुज्या-अमुकं प्रति लिखति-खुज्या अमुके सलामबन्दगी ददनीयम्" इति । तथा समये समये यवनकर्तृकैरत्याचारैः काश्मीरिकमुख्यशिल्पनिदर्शकानि चिह्नानि बलाद् ध्वस्तानि, संभाव्यते येषु नूनं शिलालेखा अपि स्युः । राज्यश्री-कालेश्वरी (कालश्री) सद्भावश्री-महाश्री-प्रभृतीनां प्रत्नानां विशालदेवालयानां तोरणेष्वपि प्रतिष्ठासमये, उत्कीर्णाः शिलालेखा अपि आक्रामकैर्यवनाधिकारिभिः नूनं विलुप्ता भवेयुः । एवमेव विजयेश्वर-त्रिपुरेश्वर-कपटेश्वर-प्रवरेश्वरादीनां प्रसिद्धानामपि देवगृहाणां विध्वंसेन सार्धमेव ताश्शिलालेखाः समयदुःस्थित्या तैर्विनाशिता एव । किं बहुना, बहूनां प्रासादानां राजवेश्मनामाधाराः प्रवरपुर-ललितपुर-पद्मपुर-सिंहपुर (वर्तमान-ल्यतपोर-पम्पोर-स्यम्पर)-प्रभृतिषु धामस्वपि नोपलभ्यन्ते । का कथा तदाधार स्थितानां शिलालेखानाम् ।

कदाचिद् हिन्दुशासकानां शिलालेखाः बौद्धैः, सौगतानां च हिन्दुशासकैः तत्तद्देवालयेन तत्तद्विहारेण च सार्धमेव विध्वंसं नीता, इति आरीग्रामाभ्यन्तरे (संस्कृतभाषायां-आर्यग्रामः) एकेन श्रीप्रतापसंग्रहालयस्थेन शिलालेखेन ज्ञायते ।

किञ्च मार्तण्डमहाभूमावधित्यकायां स्थितस्य सूर्यमन्दिरस्य शिलालेखस्तु ललितादित्यसमकालिकोऽस्ति । यस्येदमुद्धरणमधस्ताद् दीयतेः—

१.....इतः यश्चायं..... ।

२.....पद्मोद्भवहेतुत.....स्वाभिपद्मोद्भवाद्ब्रह्मप्राप्तिकृतोद्य..... ।

३......व्याप्युग्रधामोत्करश्श्लाघ्यः कर्तुरपि प्रजां प्रतिदिनं कुर्वन्निवाशान्नवाम् ॥ वि... ।

४. वादव्याप्तजगत्त्रयश्श्रितदयः कुर्वन्सदैवोदयम् । चक्राक्रान्तिसमुज्ज्वलः परिप.... ।

५. ....तो मुरारेरपि ॥ क्रान्तानन्तदिगम्बरात्कर परिव्याप्तत्रिलोकी तलाद्रोभिः.... ।

६. मतानि ज्ञानशशभृत्खण्डस्य धाम प्रभुर्भ्राम्यन्नृतविधायिनोऽपि जगतो यश्शंकर.... ।

७....श्री मृताण्डस्य बिम्बं श्री श्री वर्मासपर्याहितमतिरकृत श्री.....सप्ततिराज्य..... ।

८. .....पश्रियोऽस्य त्र्यक्षोपेन्द्राब्जजानां प्रसभमपहृताशेषरक्षा श्रमस्य श्रीमा..... ।

परस्ताच्च यवनशासनसमये श्री सहाब-उद्दीनस्य राज्यकाले समुत्कीर्णः कपटेश्वरस्य (वर्तमान-कूटिहेर) एको विशालः—शिलालेखः काश्मीर प्रतापसंग्रहालये (S.P.S Museum) उपलभ्यतेस्म, यस्त्वधुना जीर्णोद्धाराय संग्रहालयाध्यक्षेण प्रदर्शिन्यां न निवेशितोऽस्ति । तस्मान्नोद्ध्रियते । एतदतिरिक्तं प्रमाण्डदेवस्य प्रतापपुरे (वर्तमान-तापरग्रामे) समुपलब्धेन मण्डपस्थेनैकेन शिलालेखेन प्रतीयते । असौ लौकिक-संवत् ३३ आषाढ शुति १५. उट्टङ्कितोऽस्ति । जयसिंहस्य वाङ्गतारण्ये उपलब्धे शिलालेखे संवत् ८५ चैत्र शुति द्वादशी तिथिः, निर्दिष्टास्ति, यस्त्वेकस्मिन् शिलामण्डपे समुल्लिखितोऽस्ति ।

एवमेव संवत् २५ आषाढशुति ३ विजयकण्ठस्यैको शिलालेख एकस्मिन् मण्डपे लिखितोऽस्ति यस्मिन् शासकस्य नाम विनष्टम् ।

किञ्च पञ्चदशशतकीयस्य बड़शाहनाम्ना प्रसिद्धस्य जैन-उल्लाब्दीन नृपस्य शासनकाले खोनमोषाख्य (वर्तमान-ख्वनमुह) ग्रामे हर्षेश्वरस्यभ्यन्तर्वर्तिनः भुवनेश्वरस्यैकः शिलालेखोऽधस्ताद् अक्षरशउद्ध्रियतेः—

१. ओं सं ५ मार्ग शुति ५ शुक्रे ।
अनात्मा विश्वभूतात्मा निर्गुणस्सगुणश्च यः
सदसद्व्यक्तिरहितस्तस्मै सर्वात्मने नमः ॥[१]
त्रिंशाधिके च शतभूतयुते कलस्य (लेः)
कलिसंवत् ४५३०, ख्रिस्ताब्दानुसारं १४२८)

२. याते सहस्रचतुरे शरदां बभूव ।
श्रीमत्सकन्दरसुतो धरणीधरेन्दु
स्सतीसरे ह जयनोलबदेश शाहः ॥
अग्रहारे खगेन्द्रस्य खोनमोशे (मुषे) ह भूपतेः ।

३. द्विजेशे (श) शिद्वन्दकशश्रीमान्देशाधिपतिरभूत् ॥
अत्राग्रहारे वणिजपूर्णकोऽभूत्सुतात्मजः
अनेन पुण्यवृद्ध्यर्थमाश्रमोऽयं प्रचक्रिरे ।

४. हर्षेश्वरस्य देवस्य योजनार्थमधस्थिता
भुवनेशस्य निकरे स्वर्नदी पापहारिणी ॥
गङ्गासमीपे परमेष (श) भक्त्या

---

१. वाचस्पति गैरोला—संस्कृत साहित्य का इतिहास

५. तप्तुं तपो ज्ञानपरोऽत्र योगी
जयाख्यपीडस्य नृपस्य दुर्गा
त्समाययौ गम्यति सोदकाख्य: ॥

६. जित्वा मारं प्रबलतमसं बद्धपद्मासनस्थ
स्स्मृत्वा ध्यानमलुठितपदमक्षयं सेवमान:
काले तेनैवेह कलियुगे लब्धमार्गश्शिवस्य ।

७. स सदाद्र्यें किमपि न पदं सिद्धयते सर्वलोके
——चतुर्थेऽप्यथ वत्सरे ।

८. इह स्थाने प्रतिष्ठाभूत्पञ्चम्यां शुक्रवासरे ॥
राकाभिद् (ध) स्य वणिजपुत्रौ कन्थकनत्यकौ
स्थितौ तत्रास्ति लेखज्ञस्तक्षको गग्गाभिद (ध:)

(एते सर्वे शिलालेखा: प्रतापसङ्ग्रहालये आसन्)

काश्मीरिका म्लेच्छा: पुरा यवनभाषानभिज्ञा: स्वमृतकानां स्मारकशिलापट्टकेष्वपि (Tombs) संस्कृतेनैव संवदुल्लेखनपुर:सरं नामाङ्कनं कुर्वन्ति स्म, यस्योदाहृतिरूपेण कतिपये अंशा काश्मीरेष्वधुनापि लभ्यन्ते हारीपर्वतनिकटे प्रवरेश्वरमन्दिरे (वर्तमानबहाउद्दीन जियारत) । अस्योल्लेख: पाश्चात्यविदुषा डॉ. एम. ए. स्टीन महोदयेन कल्हणकृतराजतरङ्गिण्या:, आङ्ग्लभाषाया अनुवादे कृतोऽस्ति ।

किञ्चानेकेषां तडागादीनां लोलाबप्रदेशवर्तिनां स्मारकभूता: शिलालेखा अपि संस्कृतेनैव लिखिता: सन्ति । यस्यावशेषा: परेपुरादिप्रदेशेषु सुस्पष्टं लभ्यन्ते, एतेऽपि जैन-उल्लाब्दीनशासनकालिका एव । अतोऽधिकमुपलभ्यमाना: शिलालेखा: खुरहामा-वल्लराम-पहलग्रामादिप्रदेशेषु अद्यपर्यन्तं न सुस्पष्टं वाचिता: न चापि प्रकाशिता: सन्ति । एषु कतिपये स्नानागारेषु यवनै: क्षालनक्रियायै सन्निहिता: सन्ति । किं च वराहमूले (वर्तमान-बारामुल्ला) कुशानकालीन: शिलालेख एकस्याश्वारोहिन: योद्धु: करवालेऽध: समुट्टङ्कितोऽस्ति यस्तु दुर्भाग्यवशात् केनापि वैदेशिकयात्रिणा ततश्चौर्येणापहृत्य अमेरिकाभ्यन्तरवर्ति'कलिफोर्निया' प्रदेशं प्रापित:, अद्य पर्यन्तं न केनापि प्रकाशित:

एतदतिरिक्तं श्रीनगरे बसन्तबागाभ्याशे वसन्तघाटस्य शिलालेख: सिंह (सिक्ख) शासकस्य वसन्तसिंहस्याधुनापि विराजते यस्तु श्लोकबद्धोऽस्ति । किञ्च रघुनाथमन्दिरे जम्मूप्रदेशे दिवंगतस्य महाराजरणवीरस्यैको बृहच्छिलालेखो रघुनाथस्य पादमूले विद्यते, यत्र रघुनाथमन्दिरस्य समस्तं कार्यजातं मूर्तीनां विवरणञ्च सविस्तरं वर्णितमस्ति ।

एवं च अमरेश्वरतीर्थस्य (वर्तमान-अमरनाथस्य) एको विशाल: शिलालेख: श्रीअमरनाथस्तुतिपरक: राज्ञश्चन्द्रचूड़स्य काश्मीरप्रतापसंग्रहालये विद्यते । एते त्रयोऽपि देवनागराक्षरै: टङ्किता: सन्ति ॥

मकदूम साहिब की वसीयत नामा भी इसे शारदा लिपि में मिला है।

# रसाभिव्यक्ति के उपादान और अभिनवगुप्त

■ डॉ० अन्विता शर्मा

भारतीयसौन्दर्यदर्शन का मुख्य आधार काव्यशास्त्र है। इसकी विचार-परम्परा पञ्चधा विभक्त की गयी है— रस, अलंकार, रीति, ध्वनि, वक्रोक्ति एवं औचित्य सिद्धान्त। परन्तु अत्यन्त प्रमुख सम्प्रदाय पद का गौरव केवल रस, ध्वनि और अलंकार को ही प्राप्त हुआ। जो सिद्धान्त आचार्यों द्वारा लम्बे समय तक अविच्छिन्न रूप से परिवर्धित एवं परिशोधित हुआ उसी को सम्प्रदाय पद से अभिहित किया गया। इस श्रेणी में रस-सम्प्रदाय सर्वप्राचीन है जिसकी परम्परा अविच्छिन्न रूप से भरत से लेकर उन्नीसवी शताब्दी के आचार्य पण्डितराज जगन्नाथ तक चलती चली आयी। आचार्य भरत के पूर्व रस की दो परम्पराएँ थी। एक द्रुहिण की अष्टरस परम्परा दूसरी वासुकि की नवरस परम्परा। आचार्य भरत को ब्रह्मा से रस परम्परा प्राप्त थी। आचार्य भरत द्रुहिण परम्परा के समर्थक रहे कहीं कहीं वासुकि परम्परा को भी अपने मत की पुष्टि के लिए स्वीकार किया है। उदाहरण के लिए भावों से रस संभव होता है इस मत की पुष्टि में जो श्लोक दिए हैं उनमें से एक श्लोक नीचे[१] दिया जा रहा है। निम्नश्लोक आचार्य शारदातनय के मत में वासुकि परम्परा का है।[२] नाट्यशास्त्र में रस, भाव तथा अन्य नाट्याश्रित अर्थों की संज्ञाएँ भी परम्परा से प्राप्त हैं। आचार्य भरत का कथन है कि ये नाट्याश्रित अर्थों की संज्ञाएँ आचारोत्पन्न तथा आप्तोपदेशसिद्ध हैं।[३]

आचार्य भरत को 'रसविमर्श' परम्परा से ही प्राप्त हुआ। आचार्य भरत ने पूर्व आचार्य ब्रह्मा से रसविमर्श प्राप्त कर नये 'रससूत्र' का निर्माण किया जिसकी परवर्ती आचार्यों भट्टलोल्लट, शंकुक, भट्टनायक और अभिनवगुप्त ने व्याख्या की। भरतकृत रससूत्र[४] में 'स्थायी' इस पद का ग्रहण क्यों नहीं किया? इस प्रश्न का उत्तर आचार्य अभिनवगुप्त अभिनवभारती टीका में देते हैं कि यदि 'स्थायी' इस पद का ग्रहण सूत्र में करते हैं तो कदाचित् यह भ्रम हो सकता था कि विभावादि की भाँति 'स्थायी' भी परकीय होता है। अत: आचार्य भरत ने 'स्थायी' को विभावादि की कोटि से पृथक् रखकर यह संकेत किया कि 'स्थायी' सामाजिकगत उपक्रियमाण-

१. नानाद्रव्यैर्बहुविधैर्व्यजनं भाव्यते तथा।
एवं भावा भावयन्ति रसाभिनयैः सह॥ ना० शा० ६/३६

२. नानाद्रव्यौषधैः पाकैः व्यंजन भाव्यते तथा।
एवं भावा भावयन्ति रसाभिनयैः सह॥ इति वासुकिनाप्युक्तो भावेभ्यो रससंभवः। (शारदातनय भावप्रकाशन)

३. यथा च गोत्रकुलाचारोत्पन्नानि आप्तोपदेशसिद्धानि पुंसा नामानि भवन्ति, तथैवेषां रसानां भावानां च नाट्याश्रितानां चार्थानामाचारोत्पन्नानि आप्तोपदेशसिद्धानि नामानि भवन्ति। ना.शा. ६

४. विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः।